309sk26B

**26**

# संस्कृतस्य प्रयोजनमूलकता

भवन्तः जानन्ति एव किमपि वस्तु, कापि क्रिया, कोऽपि व्यवहारः सर्वमेव प्रयोजनमूलकम् एव भवति। प्रयोजनं विना तु मन्दः अपि न प्रवर्तते। एकस्य वस्तुनः, क्रियायाः वा प्रयोजनम् एकम् अनेकं वा भवितुं शक्नोति। यदा भवान् जलपूरितं किमपि पात्रं नीत्वा विद्यालयं भ्रमणाय वा गच्छति, तदा जलस्य उपयोगः तु पिपासा–शान्त्यर्थम्/ मुखधावनार्थम्, वस्त्रपतित–दोष–धावनार्थम्, फलप्रक्षालनार्थम् दुर्घटनाग्रस्तस्य मूर्च्छितजनस्य नेत्रयोः सि×चनार्थम्, वा भवितुं शक्यते। एवं हि परिस्थितिवशात् जलस्य विविधप्रयोजनानि वयं पश्यामः। एवमेव भाषायाः अपि क्षेत्रवशात् विविधानि प्रयोजनानि भवन्ति। पाठेऽस्मिन् वयं प्रयोजनमूलकं संस्कृतस्य विषये पठामः।

## उद्देश्यानि

**इमं पाठं पठित्वा भवान्–**

- प्रयोजनमूलकसंस्कृतस्य अभिप्रायं व्यक्तुं शक्तः भविष्यति;
- संस्कृतभाषायाः विविधरूपाणाम् उल्लेखं करिष्यति;
- प्रयोजनमूलकसंस्कृतस्य विविधक्षेत्राणां परिचयं दास्यति;
- प्रयोजनमूलकसंस्कृतस्य उपयोगिताम् आधृत्य स्वविचारान् प्रस्तोष्यति।

## क्रियाकलापः

भवान् शैक्षिकभ्रमणाय 'आगरा' इति नगरं गन्तुम् निश्चयम् करोति। निश्चितमेव अस्याः

शैक्षिकयात्रायाः अनेकानि प्रयोजनानि भवतः मनसि भविष्यन्ति। कानिचित् त्रीणि प्रयोजनानि महत्त्वक्रमेण अत्र लिखतु–

1. ..........................................

2. ..........................................

3. ..........................................

## 26.0 अधुना अवगच्छामः

### संस्कृतस्य प्रयोजनमूलकता

## 26.1 परिचयः

भाषायाः महत्त्वं तु सृष्टिकालतः एव वर्तते। भाषां विना जीवनं सक्रियतां न भजते। सांसारिक–व्यवहारः अपि सम्यक् न प्रचलति। भाषा अस्माकं कृते न केवलं परस्परं विचाराणाम् आदान–प्रदानस्य साधनम् अस्ति, अपितु तद्भाषायां रचितं विविधं साहित्यं पठित्वा वयम् तन्निहितं जीवनमूल्यानि धारयामः। एवमेव विविधं ज्ञानं विज्ञानं च जानीमः। प्राकृतिकसम्पदः ज्ञानम्, कृषिक्षेत्रे अन्नानाम्, प्रयुक्तोपकरणानां नामानि, विपणिस्थवस्तूनां नामानि शिष्ट–व्यवहारोचित–शब्दानां ज्ञानमपि तद्भाषया एव बोधामः।

संस्कृतं तु विश्वस्य प्राचीनतमा भाषा। अस्याः भाषायाः विपुलं साहित्यम्, विशालः शब्दभण्डारः, ज्ञानकोषः च। ऋक्–यजुः–साम–अथर्ववेदाः विश्वस्य प्राचीनतमाः ग्रन्थाः। वेदस्य षडङ्गानि शिक्षा–कल्प–निरुक्त–व्याकरण–छन्दः–ज्योतींषि। व्याख्याग्रन्थाः ब्राह्मण–आरण्यकादयः, वेदान्तग्रन्थाः उपनिषदादयः। सर्वम् एतत्तु वैदिकं साहित्यम्। अष्टादशपुराणानि, रामायणम्, महाभारतम्, नीतिकाव्यानि, कथा ग्रन्थाः, निघण्टु (वैदिकशब्द–कोषः), अमरकोशः (लौकिकसंस्कृतशब्दकोषः) संस्कृतसाहित्यस्य अद्भुतानि रत्नानि।

संस्कृतम् अपि अस्माकं वाग्व्यवहारस्य भाषा। अनेकेषु विद्यालयेषु/महाविद्यालयेषु/विश्वविद्यालयेषु संस्कृतं संस्कृतमाध्यमेनैव पाठ्यते। अतिसमृद्धम् अस्य साहित्यम्। आधुनिकाः वैज्ञानिकाः यत् अद्य विचारयन्ति, तत्तु बहुकालपूर्वमेव संस्कृते निबद्धं वर्तते। आवश्यकता अस्ति प्राच्यविज्ञानस्य शोधस्य।

किं भवन्तः जानन्ति यत् आयुर्वेदः (चिकित्साशास्त्रम्) भूगोलविज्ञानम्, खगोलविज्ञानम्, विमानविज्ञानम्, गणितम्, (शून्यमानम्) ज्यामितिः (शुल्वसूत्रम्), बीजगणितम्, जलविज्ञानम्, अस्त्रविज्ञानम् (ब्रह्मास्त्रम् आदीनि), कृषिविज्ञानम् आदीनि सर्वविधं ज्ञानं संस्कृतभाषायां गौरवान्वितम् आश्चर्यकरं च वर्तते।

## 26.2 संस्कृतभाषायाः विविधरूपता

संस्कृतस्य विशालं क्षेत्रं पठित्वा भवन्तः किं विचारयन्ति? एतदेव यत् भवन्तः केवलं संस्कृतभाषाया उपर्युक्तं प्राच्यं ज्ञान–विज्ञानं सर्वं बोद्धुं समर्थाः। तत्तु न शक्यम्। वस्तुतः संस्कृतम् अपि प्रयोजनमूलकम् एव। यतः संस्कृतसाहित्यं विविधम् अद्भुतं च। अतः संस्कृतभाषायाः प्रयोजनानि अपि विविधानि। यथा हि वेदानां बोधः वैदिकसंस्कृतेनैव भवितुं शक्यते, न तु लौकिकसंस्कृतेन। एवमेव उपनिषदां बोधः तद्भाषया एव भवति, पुराणानां भाषा पृथक् भवति, रामायण–महाभारतयोः भाषा पृथगेव। आयुर्वेदस्य भाषा, जलविज्ञानस्य भाषा, खगोलविज्ञानस्य भाषा, कृषिविज्ञानस्य भाषा, धातुविज्ञानस्य भाषा, गणितस्य भाषा, भूगोल विज्ञानादीनाम् अपि भाषा भिन्ना–भिन्ना भवति। अनेनैव ज्ञायते यत् संस्कृतस्य वाङ्मयं विज्ञातुं क्षेत्रशः भाषा–ज्ञानमपेक्षते। अतः संस्कृतंभाषायाः अपि प्रयोजनानि विविधानि। एतद्विषये साररूपेण वयम् अग्रे पठामः।

## पाठगतप्रश्ना 26.1

1. सांसारिकव्यवहारः कां विना न प्रचलति?

   (क) धनम् (ख) साहित्यम्

   (ग) भाषाम् (घ) वेदम्

2. वैदिकशब्दकोषः अस्ति–

   (क) ऋग्वेदः (ख) निघण्टुः

   (ग) उपनिषद् (ख) अमरकोशः

3. संस्कृतभाषायाः प्रयोजनानि सन्ति–

   (क) विविधानि (ख) अद्भुतानि

   (ग) असमीचीनानि (घ) बोद्धव्यानि

---

## 26.3 वैदिकं लौकिकं च संस्कृतम्

'संस्कृतम्' भाषादृष्ट्या द्विविधम् वैदिकम् लौकिकम् च। अतः वैदिकसाहित्यम् लौकिकं संस्कृतसाहित्यम् अपि पृथक् पृथक्। अत्र क्रमशः तयोः प्रयोजनमूलकतां वयं पश्यामः।

### (क) वैदिकं संस्कृतम्

भवन्तः इतः पूर्वं वैदिकसाहित्यस्य परिचयं पठितवन्तः। एतं विषयम् उदाहरणमाध्यमेन जानीमः। वस्तुतः वैदिकशब्दानां ज्ञानम् 'निघण्टुः' इति वैदिककोशेनैव सम्यक् भवति। यथा 'अमृतस्य पन्थाः' इति पाठे वैदिकमंत्राणाम् अर्थबोधः भिन्नतरः भवति। पश्यन्तु–

(i) 'इन्द्रः **पृथिव्यै**[1] **वर्षीयान्**[2] गोस्तु **मात्रा**[3] न विद्यते' (यजुर्वेदः 3.48)

सामान्यार्थः– पृथिवी के लिए[1]। वर्षा से युक्त[2] अंशः/भागः[3] = न उचितः अर्थः।

वैदिकार्थः– पृथिव्याः, वृद्धः/पूर्वजः, तुलना = उचितः अर्थः
(पृथिवी से) (पहले उत्पन्न हुआ/बड़ा) (दो में बराबरी करना)

(ii) 'आत्मानं **रथिनं** विद्धि' अत्र 'आत्मा' रथी अस्ति। अस्य भावार्थः ग्राह्यः रथम् = शरीरम्, शरीरम् अस्ति अस्य = रथी, अर्थात् आत्मानं विना शरीरस्य महत्त्वं नास्ति।

(iii) 'विद्वांसो हि **देवाः**' वेदे 'विद्वान्' देव–पर्यायार्थे विद्यते।

### (ख) लौकिकं संस्कृतम्

रामायणम्, महाभारतम् अष्टादशपुराणानि, प×चतन्त्रम्, सुभाषितानि, नाट्यम्, प्रहेलिका–पद्यानि, स्मृतिग्रन्थाः, अर्थशास्त्रम् इत्यादीनि संस्कृतवाङ्मयस्य विविधानि रूपाणि। तेषां ज्ञानमपि संस्कृतभाषायाः प्रयोजनमेव। लौकिकसंस्कृतसाहित्यस्य बोधनेऽपि विविधरूपता दृश्यते। यथा–रामायणे–'रामः' महापुरुषत्वेन एव वर्णितः अर्थात् समस्तमानवीयगुणानां स्वरूपंम् एव रामः। महाभारतं तु धर्मज्ञानस्य कोशः एव तत्। पुराणानि अष्टादश। तेषां विविधरूपतां तदध्ययनेन ज्ञातुं शक्नुमः।

प×चतन्त्रे– 'माता शत्रुः पिता वैरी येन बालो न पाठितः'। अस्य सामान्यार्थः तु माता–पितरौ शत्रुरूपौ। अस्य अयं भावः नास्ति यत् अशिक्षितः बालः माता–पितरौ प्रति शत्रुभावेन व्यवहरेत्।

'प्रहेलिकानाम्' विषये भवन्तः द्वितीये पाठे 'यदि जानासि तद् वद्' अत्र पठितवन्तः। तासाम् अर्थबोधनप्रकारोऽपि भिन्नरूप एव। एवमेव "वृक्षाग्रवासी न च पक्षिराजः, त्रिनेत्रधारी न च शङ्करोऽसौ" अत्र त्रिनेत्रधारी शिवः न, अपितु 'नारिकेलफलम्' एव।

## 26.4 वैज्ञानिकं स्वरूपम्

भवद्भिः पूर्वमेव पठितं यत् अस्माकं प्राच्यविज्ञानम् सुविस्तृतम् अस्ति। अत्रोदाहरणमा–ध्यमेन आयुर्वेद–गणित–खगोलविज्ञानादिविषये पठामः।

**(क) आयुर्वेदविज्ञानम्** भवन्तः 'शल्यचिकित्साजनकः सुश्रुतः' इति एकविंशं पाठं पठितवन्तः एव। तत्र या शब्दावली वर्तते सा आयुर्वेदीयभाषा। अतः तदनुसारमेव भवद्भिः उक्तपाठस्य अवबोधः कृतः। यथा हि–

''शस्त्राणि षट्प्रकाराणि तद्यथा स्वास्तिकयन्त्राणि, सन्दंशयन्त्राणि, तालयन्त्राणि, नाडीयन्त्राणि, शलाकायन्त्राणि, उपयन्त्राणि चेति। यन्त्राणां मुखानि मृगपक्षिणां मुखैः सदृशानि भवन्ति।''

आयुर्वेदस्य चरकसंहिता, सुश्रुतसंहिता, अष्टांगहृदयम् भावप्रकाशः नैके ग्रन्थाः। एवमेव 'आरोग्यं परमं सुखम्' इति तृतीये पाठे– 'दृष्टिः प्रसादं लभते मरुतश्चोपशाम्यति' अस्य विशेष अर्थः भवद्भिः पठित एव।

विशेषः– द्वादशकक्षायाम् संस्कृतविषयेण सह उत्तीर्णः छात्रः/छात्रा बी.ए. एम.एस इति पञ्चवर्षीयपाठ्यक्रमे प्रवेष्टुमर्हति। राजकीयसेवायां नियुक्त्यै अस्य मानं 'एम.बी.बी.एस.' इति समकक्षं भवति।

(ख) एवमेव 'गणितविषयम् आधारितं विंशं पाठं 'अनन्तः ज्ञानसागरः' भवन्तः पठितवन्तः। तत्र शुल्वसूत्रात् उद्धृतं त्रिभुजमानं पश्यन्तु–

= अब$^2$ + बस$^2$ = अस$^2$

आर्यभट्टोऽपि महान् गणितज्ञः आसीत्। तेन वृत्तस्य, त्रिभुजस्य, चतुर्भुजस्य, समभुवः च सिद्धिप्रकारम् उपवर्णितम् अस्ति–

वृत्तं भ्रमेण साध्यं त्रिभुजञ्च चतुर्भुजञ्च कर्णाभ्याम्।

साध्याजलेन समभूश्च ऊर्ध्वं लम्बकेनैव।। (आ. भ. 2/13)

अतः गणितसन्दर्भे या भाषा प्रयुक्ता, सैव गणितविज्ञानस्य बोधाय उपयुक्ता।

**(ग) खगोलविज्ञानम्**– अस्माकं ज्योतिषशास्त्रे नक्षत्राणां गणना, सूर्य–चन्द्र–मंगल–बृहस्पति–शनि ग्रहाणां स्थितिः, पृथिव्याः दूरत्वं, पृथिव्याः गतिः, सूर्य–चन्द्रग्रहणकालः सर्वं खगोलसम्बन्धिचिन्तनं वर्तते।

एकमुदाहरणमत्र पश्यन्तु–

एवं नवकोटय एकप चाशल्लक्षाणि योजनानां मानसोत्तरगिरिपरिवर्तनस्योपदिशन्ति''........ ....। (श्रीमद् भा.पु. 5/31/6)

अर्थात् एवं मानसोत्तरपर्वते सूर्यस्य परिक्रमणमार्गः एकपञ्चाशत्लक्षोत्तरनवकोटियोजनं (95100000 योजनं = 760800000 मीलं) वर्तते।

## संस्कृते प्राच्यविज्ञानस्य महत्त्वम्

भवद्भिः पठितं यत् प्राच्यविज्ञानमपि विविधम् यथा आधुनिकविज्ञानम्। तर्हि को भेदः उभयोः? भेदोऽस्ति प्राकृतिकः, प्रयोगे भेदः, चिन्तने भेदः, परं प्राच्यविज्ञानस्य उपयोगितायां

नास्ति कोऽपि सन्देहः। भवन्तः पातञ्जलमुनेः योगस्य चमत्कारं यत्र तत्र सर्वत्र पश्यन्ति एव। आयुर्वेदस्य चिकित्सापद्धतिः सर्वेषु रोगेषु सफला दृश्यते इति विचारः अमेरिकादेशेऽपि प्रसिद्धः। एवमेव सूर्यादिग्रहाणां गतयः, दूरत्वं स्थितिः च सर्वं ज्योतिश्शास्त्रे निरूपितं वर्तते। एवमेव शून्यसिद्धान्तस्य मान्यता पिंगलेन ई. पू. 200 वर्षे बहुकालपूर्वमेव कृता। प्रथमः भारतीयगणितज्ञः ब्रह्मगुप्तः षष्ठशताब्द्यां शून्यप्रयोगनियमान् निर्मितवान्। एवमेव भौतिकं, रसायनं, रत्नविज्ञानादीनि सर्वविधविज्ञानरत्नानि अस्माकं प्राच्यविज्ञानकोशे सन्ति।

अस्तु अद्य आवश्यकताऽस्ति "प्राच्यविज्ञानस्य आधुनिकविज्ञानेन सह समन्वयः स्यात् तत्र च शोधकार्यमपि भवेत्। यतः यत् यत् आधुनिकविज्ञानेऽस्ति, तत् तत् संस्कृतविज्ञानेऽपि अस्ति।

## पाठगतप्रश्नाः 26.2

1. यजुर्वेदे 'गोस्तु मात्रा न विद्यते' अत्र 'मात्रा' शब्दस्यार्थः अस्ति–

   (क) गोमात्रम् (ख) अवयवः
   
   (ग) तुलना (घ) संख्या

2. महाभारतस्य प्रारम्भः अनेन वाक्येन भवति–

   (क) अथ महाभारतकथा (ख) अथातो धर्मजिज्ञासा
   
   (ग) अथातो ब्रह्मजिज्ञासा (घ) अथेतिहासपुराणम्

3. कः वृत्त–त्रिभुज–चतुर्भुजानां सिद्धिप्रकारं वर्णितवान्–

   (क) वराहमिहिरः (ख) सुश्रुतः
   
   (ग) श्रीधराचार्यः (घ) आर्यभट्टः

4. ब्रह्मगुप्तः ........................... नियमान् निर्मितवान्–

   (क) शून्यप्रयोगस्य (ख) चिकित्सायाः
   
   (ग) शिक्षायाः (घ) कल्पस्य

## 26.5 व्यवसायात्मिकानि संस्कृतस्यक्षेत्राणि

भवद्भिः पठितं ज्ञातं च यत् संस्कृतम् अद्यापि देशे विदेशेषु च पठ्यते। अतः संस्कृतज्ञाः विविधक्षेत्रेषु कार्यरताः दृश्यन्ते। संक्षेपतः सम्प्रति प्रयोजनमूलकंसंस्कृतस्य निम्नलिखितानि क्षेत्राणि सन्ति–

**(i) अध्यापनम्**– संस्कृतज्ञानां कृते विद्यालय–महाविद्यालय–विश्वविद्यालयेषु अध्यापनस्य पर्याप्तः अवसरः। तेषां कार्यक्षेत्रं राजकीयसंस्थासु व्यक्तिगतसंस्थासु च सम्मानजनकम्। जीवननिर्वाहाय उत्तमा सेवावृत्तिः।

**(ii) प्रशासनिक सेवा**— संघलोकसेवा–आयोगः विविधप्रशासनिकसेवानां परीक्षां करोति। राज्यस्तरीय–अखिलभारतीयस्तरीयाः परीक्षाः भवन्ति। भारतसर्वकारस्य सर्वोच्च प्रशासनिक सेवा आइ.ए.एस. भवति। संस्कृतज्ञः तु संस्कृतं विकल्पविषयरूपेण स्वीकृत्य तत्परीक्षाम् उत्तीर्य 'भारतीय प्रशासनिक अधिकारी' भवितुं शक्यते। एवमेव राज्यस्तरीय–प्रशासनिक अधिकारी अपि। केचन दिल्ली उच्चन्यायालयस्य मुख्यन्यायाधीशाः अपि संस्कृतज्ञाः आसन्।

**(iii) चिकित्सा**— भवन्तः द्वादशकक्षां संस्कृतविषयेण सह उत्तीर्य पञ्चवर्षीय आयुर्वेदाचार्यस्य पाठ्यक्रमे प्रवेशं लब्ध्वा चिकित्साक्षेत्रे कार्यं कर्तुं शक्नुवन्ति। तत्समकक्षता एमबीबीएस इव भवति।

**(iv) सैनिकक्षेत्रम्**— सेनायां धर्मगुरोः इति पदं नायबसूबेदाररैंक समं भवति। संस्कृतविषयेण सह उत्तीर्णः कोऽपि स्नातकः तत्सम्बन्धिपरीक्षाम् उत्तीर्य धर्मगुरुपदे नियुज्यते।

**(v) प्रसारणक्षेत्रम्**—

(क) **आकाशवाणी**— आकाशवाणीतः (रेडियो) अनेके कार्यक्रमाः बहुकालादेव प्रचलिताः सन्ति। प्रतिदिनं वयं प्रातः सायं च संस्कृत–वार्तानां प्रसारणं शृणुमः। वार्तानां (समाचाराणां) भाषा सामान्या शुद्धा, स्पष्टा, जनसामान्यैः (दशमकक्षापर्यन्तं पठितैः जनैः अपि) श्रुत्वाऽपि ग्राह्या भवेत् इति। यथा–

"अद्य 15 अगस्ते 2008 प्रातः 7.30 वादने अस्माकं प्रधानमंत्री रक्तदुर्गतः समस्तदेशवासिनः समबोधयत्' इति स्थाने यदि समाचारवाचकः "अद्य प्रातः सार्धसप्तवादने प्रधानमंत्री लालकिलाप्राचीरतः राष्ट्रं सम्बोधितवान्" इति वदेत् चेत्तर्हि भाषा अधिका सरला सुबोध्या च स्यात्।

(ख) **दूरदर्शनम्**— एवमेव वयं दूरदर्शनेऽपि न केवलं मनोरञ्जकान् ज्ञानवर्धकान्, कार्यक्रमान् पश्यामः अपि तु तत्र प्रातः 6.55 – 7.00 वादनं यावत् संस्कृतसमाचारान् अपि शृणुमः पश्यामः च। तत्र वाचकः प्रत्यक्षं दृश्यते अतः तस्य भाषा न केवलं शुद्धा, स्पष्टाक्षरा, लय–भावपूर्णा च भवति अपि तु तस्य एका विशिष्टा शैली अपि भवति। अर्थात्

घटनाविशेषसन्दर्भानुसारमेव, चित्राणि समाचारवाचकस्य अभिनयात्मिका भावाभिव्यक्तिः अपि च भवति। तेन संस्कृत–समाचाराः रुचिपूर्णाः प्रभावोत्पादकाः च भवन्ति।

आकाशावाणीतः च विविधनाटकानां, संवादानां प्रसारणं क्रियते। दूरदर्शने तु अनेकानि नाटकानि, गीतकाव्यानि प्रसारितानि यथा– भाति मे भारतम्, मृच्छकटिकम्, मेघदूतम्, गीतगोविन्दम् आदीनि। एवमेव संस्कृतचलचित्रे अपि प्रसारिते– आदिशंकराचार्यः, श्रीमद्भगवद्गीता च।

अतः प्रतिसाहित्यं प्रतिविज्ञानं विविधाः पारिभाषिकशब्दाः भवन्ति येषां ज्ञानेन एव तत् तत् भाषास्वरूपं जानीमः।

## 26.6 संस्कृतपत्रकारिता

आधुनिके युगे 'पत्रकारिता' सञ्चारक्षेत्रे महत्त्वपूर्णः विषयः अस्ति। उपर्युक्तं प्रसारणम् अपि पत्रकारितायाः क्षेत्रम्। एतं विषयं प्रति प्रतिदिनं युवकानाम् अभिरुचिः वर्धते एव।

संस्कृत–पत्र–पत्रिकाणां प्रकाशनमपि 'प्रयोजनमूलकमेव। प्रसारणे श्रव्यस्य दृश्यस्य च प्राधान्यं भवति। परं पत्र–पत्रिकाणां भाषाशैली श्रव्यभाषायाः भिन्ना एव भवति। अत्र लेखनकौशलस्य प्राधान्यं भवति। संस्कृत–पत्रिकाणां भाषाऽपि विषयानुरूपा, सरला, रुचिकरा, सर्वजनबोध्या च भवति। विषयगत संस्कृत–पत्रिकाणाम् अध्ययनं वयम् अग्रिमे पाठे करिष्यामः।

किं भवन्तः किमपि संस्कृतसमाचारपत्रं, कामपि संस्कृतपत्रिकां पठितवन्तः? वयं बोधामः यत् तत्र भाषाऽपि विषयानुरूपा भिन्ना एव।

भवन्तः संस्कृतपत्रकारितायाः विषये विस्तरेण अग्रिमे पाठे पठिष्यन्ति। अत्र तु भाषादृष्ट्या विषयगतचर्चां सारतः कुर्मः। यथा–

(क) **व्यक्तिपरिचयः** यदा संस्कृत पत्र–पत्रिकासु विशिष्टव्यक्तेः परिचयः दीयते तदा तस्य भाषा विवरणात्मिका भवति। व्यक्तेः वैशिष्ट्यं कोष्ठकेऽपि स्थूलाक्षरैः लिख्यते।

(ख) **वस्तु–परिचयः** कस्यापि वस्तुनः परिचयः गुणदोषरूपेण पत्रिकायां दीयते। अतः तस्य भाषाऽपि वस्तुनः विशेषतानुसारमेव भवति। यथा दूरदर्शनयन्त्रम्, चलदूरवाणी, किमपि कारयानम् ...... आदीनि।

(ग) **विज्ञापनम्** व्यावसायिकदृष्ट्या विज्ञापनस्य विशिष्टं महत्त्वम् अस्ति। विज्ञापनं विविधं भवति। यथा– व्यवहारोपयोगिवस्तूनाम्, औषधीनां, स्वास्थ्यकेन्द्राणां, शैक्षणिक् संस्थानां, पत्रिकाणाम्। प्रत्येकं विज्ञापनस्य भाषा तद् तद् विषयानुरूपा प्रभावमयी च भवति। स्वयमेव पत्र–पत्रिकासु विज्ञापनभाषां पश्यन्तु।

(घ) **व्यंग्यचित्रं** कार्टूनम् इति कथ्यते। एतत् चित्रं प्रेरकं मनोरञ्जकं च भवति। तस्य भाषा अतीव संक्षिप्ता, प्रहारमयी, तीक्ष्णा, प्रभावमयी च भवति।

(ङ) **उद्घोषणा–** पत्रिकायाम् पत्रे वा 'उद्घोषणा' अपि कोष्ठके दीयते। यथा– 'बिहार बाढ़–पीडित–सहायता कोशः' विशेषांकस्य उद्घोषणा, संस्थायाः स्थानपरिवर्तनस्य उद्घोषणा। उद्घोषणानुरूपा भाषा अपि विशिष्टा भवति।

(च) **सूक्तयः–** पत्रिकायां विविधाः सूक्तयः प्रेरणाप्रदाः शिक्षाप्रदाः प्रदीयन्ते। परं भाषावैशिष्ट्यं, भाववैशिष्ट्यम् भिन्नमेव। यथा– विद्याविहीनः पशुः। आचारः प्रथमः धर्मः, कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।

(छ) **शीर्षकम्–** शीर्षकं तु भावद्योतकम् भवेत्। अतः तत्कृते उपयुक्तः शब्दः शब्दावलिः वा भवेत्। यथा काश्मीररस्य वर्णने– 'भूमेः स्वर्गः', प्रकृतिवैभवम् वा भवितुं शक्यते, न तु 'पर्वतीयप्रदेशः' सुदरः प्रदेशः वा।

(ज) **सारः–** पत्रिकायाम् कस्यापि समाचारस्य सम्मेलनस्य सांस्कृतिकगतिविधेः राजकीयनिर्णयस्य सारलेखनं स्थूलाक्षरैः पृथगेव लिख्यते। सरलभाषायां अल्पशब्देषु तथ्यनिरूपणम् अपेक्षितं भवति।

(झ) **पल्लवनम्–** पत्र–पत्रिकासु वाञ्छितसूचनायाः सर्वकारीय–योजनायाः, शैक्षिकयात्रायाः दुर्घटनावृत्तस्य वा पल्लवनम् (विस्तारः) अपि क्रियते। तद्भाषाऽपि तदनुरूपा सुबोध्या विषयस्य स्पष्टकरी च भवेत्।

(ञ) **मुद्रणत्रुटिसंशोधनम्–** कस्यापि विषयस्य/लेखस्य वा प्रकाशनात्पूर्वं मुद्रणे त्रुटीनां संशोधनं विशिष्टप्रकारेण भवति। येन पत्रिकायाः प्रकाशनं पूर्णं शुद्धं भवेत्। अस्मिन् विषयेऽन्तिमे पाठे विस्तरेण बोधामः।

(ट) **विविध–ज्ञान–विज्ञानविषयाः** यद्यपि अनेकाः शोधपत्रिकाः अपि भवन्ति तथापि सामान्यपत्रिकासु अपि ज्ञान–विज्ञानविषयाणां समावेशः भवति। नूतनशोधकार्याणां विवरणं दीयते। प्राच्य–ज्ञान–विज्ञानयोः युगीनं समीक्षणं चापि प्रस्तुतं क्रियते येन भवन्तः संस्कृतभाषायां निहितज्ञानविज्ञानयोः विविधक्षेत्रेषु उपयोगं करिष्यन्ति। यथा "नूतनः शोधः"– शाकाहारेण दीर्घायुः नीरोगश्च भवेत् जनः।

(ठ) **निमंत्रणपत्रम्/अभिनन्दनपत्रम्/वर्धापनपत्रम्–** संस्कृते निमंत्रण पत्र–अभिनन्दनपत्र–वर्धापनपत्राणां मुद्रणं भवति। तेषां च समाजे उपयोगः भवति। तेषां भाषा अपि विशिष्टा, विनम्रतायुक्ता भवति।

## पाठगतप्रश्नाः 26.3

1. पाठ्यक्रमे संस्कृतस्य ज्ञानम् अनिवार्यतया अपेक्षते।

   (क) एम.सी.ए. (ख) बी.ए.एम्.एस्.

   (ग) एम्.बी.बी.एस्. (घ) एम.बी.ए.

2. संस्कृते प्रसारणे श्रव्यं दृश्यं चानुभवामः ..............।

   (क) आकाशवाण्याम् (ख) गोष्ठ्याम्

   (ग) दूरदर्शने (घ) विद्यालये

3. अस्य भाषा अतीव संक्षिप्ता तीक्ष्णप्रभावा प्रहारमयी च भवति–

   (क) विज्ञापनस्य (ख) व्यंग्यचित्रस्य

   (ग) उद्घोषणायाः (घ) शीर्षकस्य

## 26.7 किम् अधिगतम्

- संस्कृतं प्रयोजनमूलकभाषा अस्ति।
- क्षेत्रशः संस्कृतभाषायाः विविधानि प्रयोजनानि सन्ति।
- स्वरूपदृष्ट्या संस्कृतस्य द्वे रूपे वैदिकसंस्कृतं लौकिकसंस्कृतं च।
- विषयगतसंस्कृतम् अपि भिन्नं भिन्नमेव।
- संस्कृतज्ञानां कृते जीवन–निर्वाहाय पर्याप्ताः अवसराः सन्ति।
- संस्कृतपत्र–पत्रिकासु ज्ञानविज्ञानमयाः लेखाः, विज्ञापनं, मनोर×जनं, खेलवृत्तं, व्यंग्यचित्राणि च भवन्ति।

## 26.8 योग्यताविस्तारः

- भवन्तः पुस्तकालयं गत्वा संस्कृतसमाचारपत्रं हिन्दीसमाचारपत्रं च पठित्वा ज्ञायताम् तयोः का भिन्नता समानता वास्ति।
- आकाशवाणी–दूरदर्शनयोः समाचारान् श्रुत्वा तयोः विषयगत–भाषागत–तुलनां कुरुत।
- संस्कृत–पत्र–पत्रिकासु प्रकाशितवैज्ञानिकसमाचाराणां लेखानां वा सूचीं रचयत।

## 26.9 पाठान्तप्रश्नाः

1. प्रयोजनमूलकसंस्कृतं किं भवति? स्पष्टयत।
2. संस्कृत–साहित्यस्य परिचयं प चवाक्येषु लिखत।
3. प्राच्यविज्ञानस्य षड् नामानि लिखत।
4. प्रसारणभाषायाः कांश्चित् चतुरः गुणान् लिखत।
5. संस्कृतपत्रकारितायाः केषाञ्चित् पञ्चक्षेत्राणां नामानि लिखत।

## 26.10 उत्तराणि

**पाठगतप्रश्नाः**

| | | | | |
|---|---|---|---|---|
| **26.1** | 1. (ग) | 2. (ख) | 3. (क) | |
| **26.2** | 1. (ग) | 2. (ख) | 3. (घ) | 4. (क) |
| **26.3** | 1. (ख) बी.ए.एम.एस. | 2. (ग) | 3. (ख) | |

**पाठान्तप्रश्नाः**

छात्राः स्वयं पठित्वा प्रश्नान् उत्तरन्तु।